मिति शेषः । इति-अतः, तदभिधाने निग्रहादित्यग्रिमेणान्वयः । विशिष्टवैशिष्ट्ये-पक्षस्य व्याप्तिविशिष्टहेतुमत्त्वे । आकांक्षा-जिज्ञासा, नास्तीति । विप्रतिपत्तितः साध्यतदभावसंशयवतस्तदेकतरकोटि-जिज्ञासा प्रथममुदेति ततः प्रतिज्ञावाक्यात्तन्निश्चये तद्धेतौ तत्प्रतीतौ च तद्गमकतौपयिकव्याप्तौ तदनन्तरमेव च पक्षस्य तादृशहेतुमत्त्व इति भावः । तदभिधाने-विशिष्टवैशिष्ट्यप्रतिपादकवाक्योच्चारणे । अत्रापि प्रथममित्यनुषज्यते । अन्यथा-लाघवमात्रमादृत्य तस्य लक्ष-णत्वोपगमे । परामर्शजनकतयेति । लाघवाद्वाक्यत्वमप्यनन्तर्भाव्य प-रामर्शजनकत्वमात्रस्य लक्षणत्वौचित्यादिति भावः । ननु मध्यस्था-कांक्षा यतो निवर्त्तते स एव न्यायः सा च शाब्दत्वप्रकारिका विष-यसिद्धिनिर्वाहकशब्दादेव निवर्त्तते न तु प्रमाणान्तरादिति न चक्षु-रादेर्न्यायत्वमत आह आकांक्षेति । आकांक्षानिवृत्तिविरह इत्यर्थः। तुल्य एवेति । व्याप्यवत्ताबोधकवाक्यस्य प्रथमप्रयोगेऽपि साध्यस-न्देहाद्यधीनानां मध्यस्थाकांक्षानामनिवृत्तेरिति भावः । दुर्निरूपं-असम्भवि । जनकताया अवच्छेदकनियतत्वात्तज्ज्ञानस्यावच्छेदक-ज्ञानाधीनत्वादिति भावः ॥ लक्षणान्तरसम्भवस्य लक्षणेऽदोषतया-तस्यैव लक्षणत्वादितिमूलमसङ्गतमतो दीधितिकृद्भावं व्याचष्टे तथा-चेति । तादृशानुगतरूपस्वीकारे चेत्यर्थः । साधकाभाव इति । तादृश-धर्मस्यैव न्यायादिपदप्रवृत्तिनिमित्तत्वसम्भवेन तत्प्रवृत्तिनिमित्ततया ज्ञाननिष्ठजातिविशेषसिद्ध्यसम्भवाद्युक्त्यन्तरस्य चासत्त्वादिति भा-वः । बाधकमित्यस्य प्रतिज्ञादिजन्यतावच्छेदकजातावित्यादिः । तेन वक्ष्यमाणसंकरस्य न्यायजन्यतावच्छेकजातावसम्भवेऽपि न क्षतिः । अन्यथेति मूलस्य प्रतिज्ञादिजन्यतावच्छेदकजातिस्वीकारे संकीर्णजातिस्वीकारप्रसङ्ग इत्यर्थकत्वमभिप्रेत्य संकरं विवृणोति न्याये-ति । न्यायजन्यं च ज्ञानं विशिष्टैकार्थविषयकं तावद्वाक्यार्थविषय-कसमूहालम्बनरूपं वेत्यन्यदेतत् । पञ्चेति । जातय इत्यग्रिमेणान्वयः । तथाच तत्रैव प्रतिज्ञादिजन्यतावच्छेदकपञ्चजातीनां समावेश इति भावः । अन्यत्रापि सामानाधिकरण्यमाह द्वित्रादीति । मिथो व्यभिचा-रितामाह एकैकेति । नन्वेकैकजन्यनानावयवजन्यबोधगततत्तदवयव-जन्यतावच्छेदकजातीनां नानात्वोपगमान्न संकरावकाश इत्यत आह तत्र तत्रेति । सुतरां मानाभाव इति । प्रतिज्ञाहेत्वादिनानावयवजन्य-

बोधनिष्ठप्रतिज्ञादिजन्यतावच्छेदकजातेर्हेत्वादिजन्यतावच्छेदकतया हेत्वादावपि प्रतिज्ञादिलक्षणातिव्याप्त्यापत्त्या तादृशजातिघटितलक्षणकरणासम्भवेन तादृशजातौ लक्षणानुरोधरूपयुक्तेरनवकाशात्। एकैकावयवजन्यबोधवृत्तिजातीरुपादाय स्वरूपयोग्यतघटितलक्षणस्य निर्दोषत्वेऽपि तदुभयादिजन्यबोधे तत्तज्जात्यभावनिर्वाहकप्रतिबध्यप्रतिबन्धकभावकल्पने महागौरवात्। तत्तज्जात्यवच्छिन्नजनकतावच्छेदकत्वेनाभिमतानां गुरुशरीराणामपि यथोक्तधर्माणां प्रतिज्ञादिपदप्रवृत्तिनिमित्तत्वौचित्येन तत्तज्जातिकल्पनं प्रतिज्ञादिपदप्रवृत्तिनिमित्तलाघवरूपाया अपि युक्ते रनवकाशादिति भावः। अननुगमेन तत्तज्जातिघटितलक्षणासम्भवाल्लक्षणानुपपत्तिरूपयुक्तेः सुदूरपराहतत्वादिति भाववर्णनमनुपादेयम्। एकैकजन्यबोधवृत्तिजातिमादायैव स्वरूपयोग्यताघटितलक्षणकरणसम्भवात्।

अन्यथेत्यादिमूलमन्यथा व्याचक्षाणानां मतमाह केचित्त्विति। तदेत्यन्तमन्यथेत्यस्यार्थः। कदाचिदिति हेत्वादिजन्य इत्यत्रापि अनुषज्यते, तेन व्यभिचारितादिलाभः। स्यादिति। वर्त्तेतेत्यर्थः नियामकाभावादिति भावः। ननु नियमेन सर्वत्रैव प्रतिज्ञाजन्यबोधे हेत्वादिजन्यव्यक्तिवृत्तिजातिमत्त्वसम्भवेन परस्परव्यभिचारिताया दुर्घटत्वात् न संकरावकाश इत्यतो बाधकान्तरं पूरयति सर्वेषामिति। सर्वत्र सर्वजातिसत्त्वे सर्वजातीनां समनैयत्यात्भेद एव दुर्लभ इति सर्वजातीयत्वप्रसङ्गोऽसङ्गत इत्यत आह एकेति। इत्थं च विजातीयशाब्दबोधजनकत्वघटितप्रतिज्ञादिलक्षणमसम्भवदुक्तिकमेवेति भावः। अत्र चानुगतकारणाभावेऽप्यननुगतकारणघटितसामग्रीणां जातिविशेषनियामकत्वं सम्भवतीति नोक्तरीत्या जातिसंकराद्यवकाशः, अन्यथाऽनुमितित्वादिजातेरप्यनियमेन प्रत्यक्षादिसाधारण्यापत्तेः, तत्रापि वह्निव्याप्यवत्तापरामर्शादीनामननुगतत्वादनुगतस्य कस्यचित्कारणस्य सम्भवेऽपि तस्यातिप्रसक्तत्वात् तादृशस्य प्रकृतेपि सम्भवाच्च। न च व्यभिचारेण तादृशजात्यवच्छिन्नशाब्दबोधं प्रत्यननुगतस्य कारणत्वासम्भवात्तादृशजातीनां कारणनियत्वं न सम्भवतीत्येकस्यान्यजातीयताप्रसङ्गो दुर्वार इति वाच्यम्। अनुमितौ परामर्शस्येव प्रकृतेऽननुगतकारणस्य कार्यतावच्छेदकसंकोचेन व्यभिचारवारणसम्भवादित्यस्वरसबीजमवसेयम्। न चानुगतनियाम-

काभावस्याकिंचित्करत्वेऽनुगतानतिप्रसक्तरूपं दुर्निरूपमिति मूला-सङ्गतिरिति वाच्यम् । स्वमतेऽनुगतनियामकाभावे न निर्भरः, अपि तु न्यायजन्यबोधादौ संकररूपबाधक एवेति वक्तुं शक्यतया तादृशबाधकस्य विचारासहत्वेपि क्षतिविरहात् ।

इदं पुनरिहावधेयम् प्रतिज्ञाद्यवयवादित्यादिमूलं न जातिविशेष-घटितप्रतिज्ञालक्षणाभिप्रायकं तथासति तादृशप्रतिज्ञादिलक्षणस्या-त्रैव निराकृतत्वेन प्रतिज्ञाग्रन्थे प्रतिज्ञाजन्यविजातीयज्ञातमित्या-दिना जातिघटितं लक्षणमाशङ्क्यानेनैव दोषेण तन्निराकरणस्य पौनरुक्त्यापत्तिः, किन्त्ववयवसामान्यलक्षणपरं प्रत्येकमित्यस्यावय-वान्तरासहकारेणेत्यर्थः. तेन न्यायजन्यबोधतो वाक्यैकवाक्यत्वाधीन-प्रतिज्ञाहेत्वादिजन्यबोधतश्च वैलक्षण्यलाभेन तदात्मकसमुदायेऽति-व्याप्तिशङ्कानिरासः । विजातीयत्वं च प्रतिज्ञाद्येकदेशजन्यबोधावृत्ति-जातिमत्वं,तेनावयवैकदेशातिव्याप्तिशङ्कानिरासः।मूले तज्जनकशब्दत्वं तल्लक्षणमित्येव पाठः । तल्लक्षणमित्यस्यावयवलक्षणमित्यर्थः। एवं चा-न्यथेत्यादिमूलस्य प्रतिज्ञाहेत्वादिजन्यतावच्छेदकजातीनां परस्पर-संकरपरत्वं न घटत इति । यदि लक्षणनुरोधमात्रेण जातिस्वी-कारस्तदा तत्साध्यपक्षहेतुकन्यायादिलक्षणानुरोधेनापि विभिन्नसा-ध्यकन्यायजन्यशाब्दबोधेषु विभिन्नानां प्रतिज्ञाद्येकदेशजन्यबोधा-वृत्तिनानाजातीनां स्वीकरणीयतया तासां च तथाविधाद्वित्रा-दिन्यायजन्यबोधे समावेशेन संकीर्णजातिस्वीकारप्रसङ्ग इति तादृ-शमूलार्थः । यदि च संकररूपबाधकभयेन जातिकल्पनासम्भवाज्जाति-घटितन्यायविशेषादिलक्षणं न संभवतीत्यन्यथैव तत्साध्यपक्षहेतुक-न्यायादयो निर्वचनीया इत्युच्यते,तदा व्याप्त्यादिपदस्येव न्यायादिप-दस्यापि नानार्थत्वे क्षतिविरहात्, सर्वसाधारणन्यायत्वादिनिर्वचनानु-रोधेन जातिस्वीकारोऽप्यनुचित इति भावः । दीधितिकारस्तु तत्तद्धी-जनकशब्दत्वं तत्तल्लक्षणमिति मूलपाठाभिप्रायेण प्रतिज्ञाहेत्वादिजन्य-तावच्छेदकजातीनां न्यायजन्यबोधादौ संकरपरतया जातिसंकर-प्रसङ्ग इति मूलं व्याख्यातवान् तादृशपाठे तद्ग्रन्थस्यावयवसामान्य-लक्षणपरत्वानुपपत्तेः । एवं च सत्यगत्या भिन्नप्रस्तावे जातिघटित-प्रतिज्ञालक्षणदूषणं विस्मृत्य प्रतिज्ञाग्रन्थे पुनस्तदाशङ्केति यथा-कथञ्चिदग्रिमग्रन्थावतारो बोध्यः ।

( चि० ) तत्र प्रतिज्ञा न साध्यनिर्देशः-साध्यपदेऽतिव्याप्तेः, किन्तूद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकवाक्यार्थज्ञानजनकत्वे सत्युद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकं वाक्यम् ।

( दी० ) साध्यनिर्देशः प्रतिज्ञेति सूत्रम् । साध्यो-विधेयधर्म्मविशिष्टो धर्म्मी, तथा च पक्षतावच्छेदकपर्वतत्वादिविशिष्टे साध्यतावच्छेदकवह्नित्वादिविशिष्टवैशिष्ट्यज्ञानजनको न्यायावयव इति पर्य्यवसितोऽर्थः । उदाहरणाच्च साध्यतावच्छेदकविशिष्टज्ञानं न पक्षतावच्छेदकविशिष्टे उपनयाच्च पक्षतावच्छेदकविशिष्टे न साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानमिति तयोर्व्युदासः ।

किन्त्वित्यादि । प्रकृतन्यायबहिर्भूतवाक्यवारणाय सत्यन्तं प्रकृतन्यायावयवत्वपर्य्यवसितार्थकम् । उद्देश्येति । प्रकृतेत्यर्थः । वह्निसाध्यकन्यायोपनयस्य वह्निव्याप्यधूमसाध्यकानुमित्यन्यूनानतिरिक्तविषयकज्ञानजनकस्य वारणाय प्रकृतद्वयम्, तथाच यादृशसाध्यपक्षकन्यायावयवत्वं तादृशसाध्यपक्षकानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्वं पर्य्यवसितार्थः । धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादावनतिरिक्तविषयकज्ञानजनकस्य हेतोर्वारणाय अन्यूनेति । निगमनवारणाय अनतिरिक्तेति ।

यद्यपि निगमने साक्षात्पक्षवाचकं पदं न श्रूयते, तथापि न्यूनताभङ्गायोपनयस्थायमादिपदस्यानुषङ्गात्तथा बोध्यम् । इत्थमेव च प्रसक्तामतिप्रसक्तिं निगमनञ्चेत्यादिना निराकरिष्यति । तदर्थश्च निगमनमन्यूनानतिरिक्तविषयकज्ञानजनकं सन्न परामर्शहेतुर्येन निरुक्तन्यायावयवत्वरूपं प्रतिज्ञात्वं तदपि

व्याप्नुयात् अबाधितत्वादेस्तद्बोधौपयिकविशिष्टहेतुसम्बन्धस्य वा बोधकतया तस्यातिरिक्तविषयकज्ञानजनकत्वादिति ।

(गा०)साध्यपदमनुमितिविधेयवाचकपरमित्यभिप्रायेण मणिकारदूषितं सूत्रकारीयप्रतिज्ञालक्षणं साध्यपदस्य प्रकृतानुमितिविधेयविशिष्टार्थपरतां स्वीकृत्य परिष्कर्त्तुमारभते साध्येति । सामान्यतो विधेयत्वस्य धर्मित्वस्य च केवलान्वयितयाऽवयवान्तरे विधेयविशिष्टधर्मिबोधकत्वमतिप्रसक्तम्, एवं च प्रतिज्ञासमानाकारे न्यायबहिर्भूतवाक्येऽपीत्यतः साध्यपदस्य तद्विशेषपरत्वं निर्देशपदस्य च बोधजनकन्यायावयवरूपवाक्यविशेषपरत्वमनुस्मृत्य पर्यवसितार्थमाह तथाचेति । पक्षतावच्छेदकसाध्यतावच्छेदकयोर्न तत्त्वेन निवेशः, अपि तु विशिष्यैवेति सूचनाय पर्वतत्वादीति वन्हित्वादीति च । तादृशविशिष्टवैशिष्ट्यावगाहिशाब्दबोधत्वावच्छिन्नजनकयत्किञ्चिज्ज्ञानविषयवर्णसमुदायत्वमिह विवक्षणीयमतो हेत्वर्थादिविषयकप्रतिज्ञार्थबोधजनकताया हेत्ववयवादिमात्रविषयकबोधसाधारण्येऽपि न हेत्ववयवादावतिव्याप्तिः । न्यायान्तर्गतत्वमुपेक्ष्य न्यायावयवत्वनिवेशात्प्रतिज्ञार्थबोधजनकप्रतिज्ञाहेत्वादिविषयकज्ञानमादाय प्रतिज्ञाहेत्वादिसमुदाये नातिव्याप्तिः । पक्षतावच्छेदकविशिष्टत्वादिनिवेशनप्रयोजनमाह उदाहरणाच्चेति । यद्यपि साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानजनकत्वमात्रस्यैव निवेशे उपनयनिगमनयोरप्यतिव्याप्तिः, तथापि यत्किञ्चिद्धर्मिविशिष्टे शुद्धसाध्यतावच्छेदकविशिष्टवैशिष्ट्यबोधजनकत्वनिवेशने न तत्रातिप्रसङ्गः । उपनयजन्यबोधे उपनयार्थव्याप्तिशरीरघटकसाध्यस्य धर्मितावच्छेदकाप्रवेशात्, निगमनजन्यबोधे च साध्यांशे हेतुज्ञानज्ञाप्यत्वस्याधिकस्य भानात्, अन्यथा पक्षतावच्छेदकान्तर्भावेऽपि अनुषङ्गपक्षेऽप्यनिस्तारादिति उदाहरणमात्रानुसरणम् । तदप्युदाहरणजन्यबोधे व्यापकत्वं न विधेयतावच्छेदकतया भासते अपि तु शुद्धवन्हित्वाद्यवच्छिन्नवत्त्वमेव सकलहेत्वाधिकरणे भासत इति प्राचीनमतमनुसृत्य । निगमनेऽयंपदानुषङ्गपक्षे तु शुद्धसाध्यतावच्छेदकविशिष्टत्वं न निविष्टम् । विशेषणान्तरावच्छिन्नवह्न्यादिसाध्यकन्यायान्तर्गतप्रतिज्ञाया शुद्धवह्नित्वावच्छिन्नसाध्यकप्रतिज्ञालक्षणातिप्रसक्तेः प्रकृतन्यायान्तर्गतत्वाभावेनैव वारणादित्यभिप्रायकमिदम् अतो व्यापकत्वस्याधिकस्यो-

दाहरणबोधे भानेऽपि न क्षतिरिति केचित्। तन्मते निगमनोपेक्षाबीजं चिन्तनीयम् ।(१)

यत्तत्पदस्योदाहरणस्थस्य न पक्षतावच्छेदकावच्छिन्नपरत्वम् ,अपि तु पक्षान्यसाध्यवत्साधारणरूपावच्छिन्नपरत्वमेव पक्षतावच्छेदकाव-च्छिन्ने हेतुमत्त्वस्य ततो लाभेन उपनयानुत्थानात्तदवच्छिन्ने साध्य-वत्त्वस्य च प्रतिज्ञात एव लाभेनाऽनाकांक्षितत्वाच्चेति पक्षतावच्छेद-कप्रवेशे नोदाहरणातिप्रसङ्गः। अथ यत्किञ्चिद्धर्मावच्छिन्नविशेष्यक-साध्यतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजनकत्व-मुदाहरणैकदेशे स वह्निमानित्यादिवाक्य एव न तु तस्य न्यायावयव-त्वं, तच्च समुदाय एव न तत्र तादृशजनकत्वमिति विशिष्य पक्षता-वच्छेदकानन्तर्भावेऽपि नोदाहरणातिप्रसङ्ग इति चेन्न। जनकत्वस्य जनकयत्किञ्चिज्ज्ञानविषयवर्णसमुदायत्वरूपस्य विवक्षितत्वात्, उ-दाहरणविषयकज्ञानविषयत्वमादाय समुदाय एवाऽतिप्रसक्तेः। एवमे-तल्लक्षणप्रविष्टन्यायावयवत्वशरीरे प्रतिज्ञाहेत्वादिसमुदायातिप्रस-ङ्गवारणायोभयघटकभागद्वयाघटितत्वमेव निवेशनीयं न तु प्रतिज्ञा द्यघटकत्वमपि प्रयोजनान्तरविरहादुदाहरणैकदेशे तादृशवाक्येऽ-

(१) न च पर्वतो आर्द्रेन्धनभववह्निमान्धूमाद्यो धूमवान् सवह्नि-मानित्यादिवाक्यपंचकान्तर्गतप्रथमवाक्येतिव्याप्तिवारणाय यद्रूपा-वच्छिन्नसाध्यकोदाहरणादिघटितन्यायान्तर्गतत्वं पक्षे शुद्धतद्रूपावि-शिष्टवैशिष्ट्यावगाहित्वमवश्यं निवेशनीयमिति वाच्यम्। तद्धर्माव-च्छिन्नसाध्यकोदाहरणादिघटितन्यायलक्षणे शुद्धतद्धर्मावच्छिन्नवै-शिष्ट्यावगाहिबोधजनकप्रकृतवाक्यरूपप्रतिज्ञानिवेशात् तादृश-न्यायान्तर्गतत्वाभावेनैवोक्तातिप्रसंगविरहात्, दलान्तरे शुद्धवह्नि-त्वादिविशिष्टवैशिष्ट्यबोधप्रवेशे प्रयोजनविरहात्। तथा च व्याप-कत्वाधिकस्योदाहरणजन्यबोधे भानेपि न क्षतिः। न चैवं निगमनेऽपि व्यावृत्तिसम्भवेन तदुपेक्षायां बीजविरह इति वाच्यम्। पर्वतो व-ह्निमानित्यादिवाक्यस्य पर्वते वह्निवैशिष्ट्यावगाहिबोधजनकत्वं मतुप्प्रकृतिनामार्थस्य नामार्थे भेदान्वय एव मतुप्प्रत्ययो निरर्थक एव भेदान्वयाकांक्षानिर्वाहक इत्यभ्युपगमे एव निर्वहतीति तथाभ्यु-पगमे केवलनिगमनात्साध्यविशिष्टबोधानुदयेन तत्र व्यावृत्त्यसंगति-रिति ध्येयमिति पाठान्तरम्॥

तिप्रसङ्गस्य लघुतरपक्षतावच्छेदकवैशिष्ट्यनिवेशेनैव वारयितुमुचितत्वात् । यद्यप्येवं नीलपर्वतो वह्निमानित्यादिभागेऽपि व्यावृत्तिः सम्भवति, तथापि सकलप्रतिज्ञैकदेशे न तथेति विशिष्योपादानं प्रयासाधिक्येनोदाहरणानुधावनमिति ध्येयम् ।

साध्यतावच्छेदकावच्छिन्नप्रकारकत्वनिवेशनप्रयोजनमाह उपनयाच्चेति । साध्यवैशिष्ट्यमात्रनिवेशेऽपि पर्वतो द्रव्यवान् धूमादित्यादिन्यायान्तर्गते उपनये तत्स्थलीयप्रतिज्ञालक्षणातिव्याप्तिरिति साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वनिवेश इत्यवधेयम् ।

यथाश्रुतसत्यन्तार्थस्योदासीनवाक्यसाधारण्यमक्षतमेव न्यायान्तर्गतवाक्य(जन्य)स्येव तदनन्तर्गततादृशवाक्यजन्यस्यापि शाब्दबोधस्योपनायकज्ञानादिविधया परामर्शप्रयोजकत्वादतस्तदर्थमाह प्रकृतन्यायावयवत्वेति ।

वह्निव्याप्यधूमसाध्यकानुमितेरपि कदाचिदुद्देश्यतया वक्ष्यमाणातिप्रसङ्गवारणासम्भवादुद्देश्यपदं प्रकृतार्थकतया व्याचष्टे उद्देश्येतीति । वह्निसाध्यकोपनयस्य—तत्साध्यकन्यायान्तर्गतोपनयस्य, एतेन(अन्यसाधकन्यायमादाय)सत्यंतदलसत्त्वमाविष्कृतम्वह्निव्याप्यधूमसाध्यकत्यादिना(अन्यसाध्यकानुमितिमादाय)विशेष्यदलसत्त्वं स्फुटीकृतम्। वारणाय-प्रतिज्ञाव्यवहारविषयतावारणाय। प्रकृतद्वयं–प्रतिज्ञापदार्थप्रविष्टन्यायानुमित्योरेकसाध्यादिकत्वप्रापकं प्रकृत(पद)द्वयम् प्रकृतन्यायावयवत्वपर्यन्तानिवेशे वह्निव्याप्यधूमसाध्यकप्रतिज्ञानुरोधेन। तत्साध्यकानुमितेरपि प्रकृतानुमितिपदेन विवक्षणीयतया तामादाय दर्शितोपनये प्रकृतानुमितिपर्यन्तानिवेशे वह्निसाध्यकन्यायस्यापि प्रकृतन्यायेत्यनेन विवक्षणीयतया तदवयवत्वमादाय तत्र प्रतिज्ञाव्यवहारस्य दुर्वारत्वादत उभयत्र प्रकृतत्वनिवेशः । तथाच सति तत्साध्यपक्षकन्यायान्तर्गतत्वघटितप्रतिज्ञापदार्थगर्भे तत्साध्यपक्षकानुमितेरेवान्तर्भावान्नातिप्रसंगस्तदेवाह तथाचेति(१)। यत्तु तादृशोपनये वह्निसाध्यकप्रतिज्ञाव्यवहारवारणाय न्याये वह्निसाध्यकप्रतिज्ञाव्यवहारवारणायानुमितौ प्रकृतत्वनिवेशनमिति प्रकृतद्वयमित्यन्तार्थ इति। तच्चिन्त्यम् । तत्साध्यपक्षकप्रतिज्ञाव्यवहारविषय-

(१) तथा सत्यभिन्नसाध्यपक्षकानुमित्यन्तर्भावे यादृशो लक्षणार्थस्तं स्फुटयति तथाचेति । इति पाठान्तरम् ।

स्यात्र निर्वाच्यत्वे प्रतिज्ञापदार्थघटकन्यायानुमित्योरुभयत्र समभिव्या-हृतसाध्यपक्षान्वयनिवेशसूचनाय प्रकृतद्वयम्, तत्साध्यपक्षकार्थक-मित्यस्यैवाभिधातुमुचिततया तदुपेक्ष्य प्रतिज्ञाव्यवहारविषयताव-च्छेदकीभूतैकधर्मशरीरे द्विधा निविष्टयोः साध्यपक्षयोरभेदमात्रला-भाय तथाचेत्यभिधाने सन्दर्भविरोधात्। यादृशेत्यादेः स्वस्येत्यादिः। तादृशेत्यादेः स्वनिष्ठमित्यादिः पर्यवसितार्थः । प्रतिज्ञापदप्रतिपा-द्यतावच्छेदकतया मूलाभिप्रायविषयः । एवञ्च सति प्रतिज्ञापदस्य नानार्थत्वं न दोषाय गत्यन्तरविरहादिति प्रागेवोक्तं ग्रन्थकृतैव। तत्साध्यतावच्छेदकावच्छिन्नतत्साध्यकत्वस्य न्यायाद्यंशेऽनिवेशने उ-क्तोपनय एवातिप्रसङ्गः। यत्पक्षकानुमितिसमानविषयकत्वं तत्पक्षक-न्यायान्तर्गतत्वस्याक्षततत्वादिति तन्निवेशनम्। द्रव्यव्याप्यधूमवानय-मित्याकारकद्रव्यत्वावच्छिन्नसाध्यकोपनयवारणाय साध्यतावच्छेद-कनिवेशनम्। एतल्लक्षणघटकन्यायावयवत्वशरीरे उदाहरणाद्यघटक-त्वनिवेशस्य सिषाधयिषाधीनन्यायप्रयोगानङ्गीकारपक्षे प्रयोजनान्तर-विरहात्। प्रतिज्ञाऽघटकत्वमात्रस्य तदेकदेशसाधारणस्य निवेशनी-यतया वह्न्यादिसाध्यकन्यायान्तर्गतस्य यत्किञ्चिद्धर्मिकवह्न्यादिसा-ध्यकानुमिन्यूनातिरिक्तविषयकबोधजनकस्य स वह्निमानित्युदाहरणै-कदेशस्य वारणायैकधर्मावच्छिन्न(पक्षक)त्वानिवेशनम् ।
वस्तुतो अत्यूनातिरिक्तविषयकत्वं प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्याव-गाहित्वे सति तादृशवैशिष्ट्यविषयिताविलक्षणविषयिताशून्यत्व-रूपमनुमितिमनन्तर्भाव्यैवाग्रे निर्वचनीयम् । तत्र प्रकृतपक्षादिनिवेश-व्यावृत्तिरग्रे दर्शनीया किं व्यावृत्यन्तरस्थलान्तरानुसरणेन ।

यत्तु पक्षविशेषमनन्तर्भाव्यानतिप्रसक्तस्य न्यायत्वस्य दुर्निर्वच-तया पक्षनिवेशनमिति । तदसत् । तथासति हेतुविशेषमनन्त-र्भाव्यापि तस्य दुर्वचतया यादृशहेतुकेत्यस्यापि वक्तुमुचितत्वात् ।

यदि च न्यायपदोपादानादेव तत्र हेतुविशेषनियन्त्रितन्यायलाभ इति न तदभिहितमित्युच्यते, तदा पक्षप्रवेशस्यावश्यकत्वेऽपि न्याय-पदादेव पक्षविशेषनियन्त्रितन्यायलाभ इति यादृशपक्षक इत्यभिधा-नस्यानुपयुक्ततेति ।

हेतोर्वारणायेति । अनतिरिक्तविषयकत्वं पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यविषयत्वं यत्तद्विलक्षणविषयता-

शून्यत्वं, न तु प्रकृतानुमित्यविषयाविषयकत्वं-स्वयमग्रे दूषणीयत्वात् । तादृशविषयताविलक्षणत्वं च तादृशविषयताशालिनिश्चयत्वावच्छिन्नानिवर्त्यसंशयनिवर्तकतावच्छेदकत्वरूपं निर्वक्ष्यते । एवञ्चोक्तहेत्ववयवजन्यबोधस्यानुमित्याविषयवह्निनिष्ठधूमज्ञानज्ञाप्यत्वविषयकत्वेऽपि तादृशविषयताविलक्षणविषयताशून्यत्वमक्षतमेवेत्यतिप्रसक्तिरिति भावः । निगमनवारणायेति । निगमनजन्यबोधस्यापि पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वेनान्यूनाविषयकतयाऽतिव्याप्तिप्रसक्तेरिति भावः ।

निगमने-तस्माद्वह्निमानिति वाक्यसन्निधाने । साक्षादिति । अवयवान्तरबहिर्भावेनेत्यर्थः । न श्रूयते इति । तथाच कथं तज्जन्यबोधस्यान्यूनविषयकत्वमिति भावः । न्यूनताभङ्गाय-आकाङ्क्षापूरणाय । पक्षतावच्छेदकविशिष्टे पक्षे साध्यवत्ताबोधने कस्तादृशवह्निमानिति जिज्ञासा निवर्त्तते, वह्निमानित्यभिधाने च तादृशाकाङ्क्षोत्सर्गतो जायत इत्यनुभवसिद्धमेवेति भावः । अनुषङ्गादिति । निगमनस्थसाध्यवाचकपदसमभिव्याहृतत्वेनानुसन्धानोपगमादित्यर्थः । तथाच तदन्तर्भाव्यैव निगमनेऽवयवत्वं पर्यवस्यतीत्यन्यूनविषयकबोधजनकन्यायावयवत्वमादाय तादृशसमुदायातिप्रसक्तिरिति भावः ।

निगमनं च न परामर्शहेतुरिति यथाश्रुताग्रिममूलग्रन्थस्य सत्यन्तदलविरहेण निगमने नातिव्याप्तिरित्यर्थपरत्वं प्रतीयते । तच्च न घटते-सत्यन्तस्य न्यायावयवार्थकत्वात्, तस्य च निगमनसाधारण्याद्यथाश्रुतस्यापि सत्यन्तार्थस्य प्रतिज्ञायामिव तत्राप्यक्षतत्वात्, अनतिरिक्तविषयकत्वविशेषणेनैव तद्वारणाच्चेत्यनतिरिक्तविषयकत्वविशेषणस्य निगमनातिव्याप्तिवारकतापरत्वेन तादृशग्रन्थमत्रैव व्याख्यातुं भूमिकामारचयति इत्थमेव चेति । अन्यूनानतिरिक्तेति । तथाच न्यायावयवत्वपर्यवसिततादृशपरामर्शप्रयोजकशाब्दज्ञानजनकत्वसत्त्वेऽपि अन्यूनानतिरिक्तविषयकज्ञानजनकत्वं नास्तीति पर्यवसितोऽर्थः । अबाधितत्वादिपरताया उदीच्यतद्बोधेनापि निर्वाहान्निगमनजन्यशाब्दबोधे तद्भानार्थं लक्षणादरो न युक्त इति मूलोक्तं तद्विषयकतयाऽतिरिक्तविषयकत्वं न विचारसहम् । एवं पञ्चम्यन्तभागार्थस्यातिरिक्तस्य विषयतया तथात्वाप्रतिपादनेन न्यूनत्वं

चेत्यतः पूरयति तद्बोधौपयिकेति । अबाधितत्वादिबोधौपयिकेत्यर्थः । विशिष्टहेतुसम्बन्धस्य-व्याप्तिपक्षधर्मताविशिष्टहेतुज्ञानज्ञाप्यत्वस्य । अस्य चाबाधितत्वादिज्ञाप्यतया तद्बोधौपयिकत्वं बोध्यम् ।

(टी०) यत्तु पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ यत्र पृथिवीतरेभ्यो भिद्यते न तत् पृथिवीत्युदाहरणवारणाय तदिति ।

तत्तुच्छम्—तेन पृथिव्यामितरभेदस्याविषयीकरणात् तात्पर्यग्रहेण तादृशबोधजनकत्वस्यातिप्रसक्तत्वात् । न च तावताप्युदाहरणस्य तथात्वसम्भवो, यन्नेत्यादेरनन्वयात् । यदि च निगमनेनायमादिपदं निविशते वाक्यैकवाक्यतयैव विशिष्टलाभादिति विभाव्यते, तदा हेतौ साध्यतावच्छेदकानाविष्करणप्रभावे सामान्यतः पक्षेऽपि साध्यवत्त्वभानात् पक्षे हेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टहेतुमत्ताबोधकस्योपनयस्य यत्र च पक्षसाध्ययोस्ताद्रूप्येण दृष्टान्तत्वहेतुत्वाभ्यामुपन्यासस्तादृशसिषाधयिषया च न्यायप्रयोगस्तत्रोदाहरणोपनययोर्यत्र वा पर्वतत्वाद्यवच्छेदेन साध्यसिद्धेरुद्देश्यतायामेतत्पर्वतत्वादिना दृष्टान्तस्योपन्यासस्तत्रोदाहरणस्य सत्पन्तस्य चावयवाघटकन्यायान्तर्गतत्वपरतया हेत्वन्तस्यायमादिनिगमनान्तभागस्य वारणाय तत् ।

यद्यपि सर्वमभिधेयं प्रमेयमित्यादावतिरिक्ताप्रसिद्धिः । न च कोट्यप्रसिद्ध्या प्रमेयं न वेति विप्रतिपत्तेः संशयस्य चायोगान्न तादृशी प्रतिज्ञा प्रकृतानुमितिविषयतासमव्याप्तविषयताकत्वं प्रकृतानुमितिप्रकारतासमव्याप्तप्रकारताकत्वं वा वक्तव्यमिति वाच्यम् । सकलाभिधेयवृत्तिधर्म्मवत्सकलाभिधेयनिष्ठात्यन्ताभावाप्रतियोग्याकाशाभाववद्वा इदं द्रव्यमित्यादौ विशिष्टपक्षवो-

धके उपनयेऽतिव्याप्तेः।

तथापि प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्याविषयत्वं तदन्यून-विषयत्वम्।

मिश्रमतमुपन्यस्यति यदि वेति। पृथिवी इतरेभ्यो भिद्यते इत्यसमस्तामितरपदं पृथिवीतरपरम् इतरादिसम्बन्धिकार्थबोधकपदानां समभिव्याहृततत्तत्पदोपस्थाप्यतत्तदर्थेतरत्वादिना निरूढलक्षणावता बादिवाक्ये स्वारसिकलक्षणाविरहेऽपि न क्षतिः। प्रतिज्ञापदार्थौ सर्वत्रैकेनैव पदेन साध्यादिनिर्देश इति न नियमः, तेन नाग्रे यत्र पृथिवीतरेभ्यो भिद्यत इत्युदाहरणप्रयोगविरोधः। विशेष्यवाचकं पृथिवीतिपदान्तरं पूरणीयम्। श्रुतपदं समस्तमित्येव वा। उदाहरणवारणायेति। तज्जन्यबोधेऽपि पक्षसाध्याश्रयत्वात्मकतत्सम्बन्धरूपानुमितिविषयसकलपदार्थभानेनान्यूनविषयकत्वसत्त्वादित्यभिमानः। तत्-अनतिरिक्तेतिपदम्।

अन्यूनविषयकत्वं हि न प्रकृतानुमितिविषयताव्यापकविषयताकत्वम्-सर्वस्मात्कालत्ववानयं कालपरिमाणवान् सर्वस्मादित्यत्र हेत्ववयवेऽतिव्याप्तेः, नापि पक्षतावच्छेदकविशिष्टपक्षविषयकत्वम्-हेतुत्वं प्रमेयत्वाद्वाच्यत्ववत्प्रमेयत्वादित्यादौ हेत्ववयवेऽतिव्याप्तेः। नापि पक्षतावच्छेदकविशिष्टविषयकत्वे सति साध्यतावच्छेदकविशिष्टसाध्यविषयकत्वं तद्वैशिष्ट्यविषयकत्वं वा-प्रमेयनिष्ठं हेतुत्वं प्रमेयं प्रमेयादित्यत्र हेतावतिव्याप्तेः-तज्जन्यबोधे प्रमेयत्वत्वरूपसाध्यतावच्छेदकविशिष्टस्य प्रमेयपदार्थतावच्छेदकस्य धर्मिणि वैशिष्ट्यभानादिति, पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वं तत् वाच्यम्, तथाच नोक्तोदाहरणातिव्याप्तिरित्याशयेन दूषयति तत्तुच्छमिति। ननु भ्रान्तः पृथिवीपदस्य विशेष्यपरत्वमितरपदस्य पृथिवीतरपरत्वमवगम्य तादृशोदाहरणात् पृथिवीत्वविशिष्टे साध्यवत्त्वं प्रत्येतीति तत्रातिव्याप्तिप्रसक्तिरित्यत आह तात्पर्यभ्रमेणेति। तादृशेति। अन्यूनविषयकेत्यर्थः। अतिप्रसक्तत्वात्-तथाचायमित्याद्याकारकसाध्यवत्त्वपरत्वभ्रमाविषयसर्वनामपदघटितोपनयेऽतिव्याप्तत्वात्। तात्पर्यभ्रमदशायामपि नातिव्याप्तिप्रसी-

करित्याह न त्त्र तावतापीति। उदाहरणस्य—उदाहरणत्वपर्याप्त्यधिक-रणस्य। यन्नेत्यादेः—यन्नेत्यादिभागार्थस्य। अनन्वयात्—पृथिवी-तरेभ्यो भिद्यते इत्येतादृशबोधेऽप्रवेशात्। तथा चान्यूनविषयक-तादृशबोधजनकत्वमेकदेशस्यैव, न तु यन्नेत्यादिघटितसमुदायस्य, एकदेशस्य तु न्यायावयवत्वाभावादेव नातिप्रसङ्गशङ्का। न्याया-न्तर्गतत्वस्यैकदेशसाधारणस्य निवेशे चानतिरिक्तविषयकत्वनिवेशे-ऽपि तादृशोदाहरणैकदेश एवातिव्याप्तिरिति भावः। तात्पर्यभ्रमेण यन्नेत्यादिकमन्तर्भाव्य यद्भिन्ना पृथिवीतरेभ्यो भिद्यत इत्यन्वय-बोधः सम्भवतीति नाशङ्कनीयम्। जलं न द्रव्यं गन्धवदित्यादितो जलभिन्नं द्रव्यं गन्धवदित्यन्वयबोधस्यानुभवविरुद्धतया नञर्थोद्दे-श्यतावच्छेदककबोधस्याव्युत्पन्नत्वात्। यदितरभिन्नपृथिव्यन्यदि-त्याकारको यदर्थविशेष्यकबोधोऽपि न सम्भवति—अयं न पचति पुरुष इत्यत्र इदंपदार्थे पाककर्तृपुरुषभेदबोधस्यानुभवविरुद्धतया-ऽभावप्रतियोगितावच्छेदकत्वेनाख्यातार्थभानस्य पचति चैत्र इवा-यमित्यादितः पाककर्तृचैत्रादिसादृश्यबोधस्याननुभवेन इतरविशे-षणविशेषणतया तज्ज्ञानस्यैवाव्युत्पन्नत्वात्।

अत्र केचित्—अन्यूनविषयकत्वं पक्षतावच्छेदकविशिष्टविषयक-त्वे सति साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वम्। एवञ्च दर्शितव्यतिरेक्युदाहरणजन्यबोधस्यापि तादृशान्यूनविषयकत्वाद-तिव्याप्तिः प्रसज्यते। न चैवमपि साध्यतावच्छेदकविशि-ष्टसाध्यपक्षतावच्छेदकविशिष्टपक्षघटितवाक्यार्थबोधकत्वमुदाहरणै-कदेशस्यैव न तु तन्न पृथिवीत्यादिभागघटितसमुदायरूपोदा-हरणस्येत्यवयवत्वविशेषणप्रवेशादेव नातिव्याप्तिशङ्केति वाच्य-म्। तादृशान्यूनविषकत्वघटितधर्मावच्छिन्ननिरूपितजनकतापर्य-न्तानिवेशात्। वाक्यार्थद्वयावषयकसमूहालम्बनबोधजनक-तामादायातिव्याप्तेः प्रसञ्जनात्, न हि तादृशसमूहालम्बनबोध-जनकत्वमेकदेशे पर्यवस्यति अपि तु समुदाय एव। अथवा न्याया-न्तर्गतत्वमेव सत्यन्तार्थः। अत एव मिश्राणां घटशब्दो गुणः द्रव्य-कर्मान्यत्वे सति सत्त्वादित्यत्रोदाहरणे यदि प्रतिज्ञारूपशब्द एव दृष्टान्तत्वेनोपादीयते तदा तत्राऽतिव्याप्तिवारणार्थत्वादित्यादि-

ना शाब्दज्ञानपदस्य व्यावृत्तिदानसङ्गतिः, तद्दाने तत्रातिव्याप्ति-प्रसक्तिर्विषयविधया श्रावणप्रत्यक्षजनकत्वात्तादृशदृष्टान्तरूपशब्द-स्येति । पक्षतावच्छेदकविशिष्टविषयकत्वमन्यूनविषयकत्वम् । एवञ्च तादृशोदाहरणैकदेशातिव्याप्तिवारणार्थमेव साध्यतावच्छे-दकसम्बन्धेन साध्यतावच्छेदकमात्रविशिष्टसाध्यप्रकारकत्वार्थक-मनतिरिक्तविषयकेति–तज्जन्यबोधस्य साध्यतावच्छेदकसम्बन्धेन साध्याप्रकारकत्वात् । मात्रपदान्तर्भावान्निगमनव्युदासः–तज्जन्यबोधे विशिष्टहेतुसम्बन्धस्याधिकस्य साध्यांशे भानेन शुद्धसाध्यतावच्छेद-कावच्छिन्नसाध्याप्रकारकत्वात् । एवञ्च वह्निव्याप्यधूमवानयमित्याद्यु-पनयजन्यबोधस्य व्याप्तिघटकाधिकरणांशे साध्यतावच्छेदकावच्छि-न्नप्रकारकत्वेपि साध्यांशे व्यापकत्वस्याधिकस्य भानेन न तत्राति-प्रसङ्गः । न चैवमपि यत्र पृथिवीतरान्यदित्युदाहरणैकदेशेऽतिप्रसङ्गः तज्जन्यबोधे पक्षतावच्छेदकविशिष्टविषयत्वस्य शुद्धसाध्यतावच्छे-दकविशिष्टसाध्यप्रकारकत्वस्य सत्त्वादिति वाच्यम् । पक्षतावच्छेद-कावच्छिन्नविशेष्यकत्वावच्छेदेन तादृशसाध्यप्रकारकत्वस्य दलद्व-यनिष्कृष्टार्थत्वात् । तादृशोदाहरणभागजन्यबोधस्य इतरभेदांशे नि-र्धर्मितावच्छेदकतया तादृशसाध्यप्रकारकत्वविरहात् । साध्यताव-च्छेदकसम्बन्धनिवेशनं च यत्र कालिकसम्बन्धेन कालपरिमाणस्पन्द-त्वादेः साध्यता समवायेन च तस्यैव हेतुता तत्रत्योपनयीयव्याप्त्या-न्तातिरिक्तभागवारणाय । सिषाधयिषया च न्यायप्रयोगो नाभ्युपेय-त इति यत्र साध्यतावच्छेदकसम्बन्धेनैव साध्यस्य हेतुता तत्रत्योपनी-यतादृशभागेऽतिप्रसङ्ग इत्यस्यानवकाशः । नचैवमपि निगमनीयत-स्मादित्यंशातिरिक्तांशेऽतिव्याप्तिर्दुर्वारेवेति वाच्यम् । तस्मादित्यं-शार्थमनन्तर्भाव्य व्यवहितयोः पक्षसाध्यवद्वाचकपदयोरन्वयबोधा-जनकत्वादिति रीत्या उक्तस्थलेऽपि वृत्तिदानं सङ्गमयन्ति ।

अयंपदाननुषङ्गपक्षे निगमनेऽनतिरिक्तविषयकत्वव्यावृत्तिर्न सङ्ग-च्छत इत्याशङ्कते यदि चेति । अयमादीत्यादिना इदमियमित्यादिपरिग्र-हः। वाक्यैकवाक्यतयेति । उपनयनिगमनवाक्ययोरेकवाक्यतयेत्यर्थः । विशिष्टलाभात्–पक्षतावच्छेदकविशिष्टे साध्यवत्तालाभाद्विशेष्याका-ङ्क्षानिवृत्तेः । न च पक्षवाचकपदाननुषङ्गे तस्मान्नेतराणीत्यादिनिगम-

नविरोधः अनुयोगयमिश्रितनञर्थशाब्दबोधस्याव्युत्पन्नतया तन्मा-
त्रस्याबोधकत्वेन वाक्यत्वाभावादिति वाच्यम्। एतन्मते तादृशनि-
गमनानभ्युपगमात्। यद्यप्यनतिरिक्तविषयकत्वानिवेशे अन्यूनवि-
षयकबोधजनकत्वं तज्जनकज्ञानविषयत्वं वा न्यायावयवत्वनिवेशोषि-
तं प्रतिज्ञाहेत्वादिजन्यबोधमादाय हेत्वादावतिप्रसक्तम्, तथापि प्र-
कृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वरूपान्यूनविषयकत्वावच्छि-
न्नजन्यतानिरूपितजनकतावच्छेदकयत्किञ्चिज्ज्ञानविषयतावद्वर्णसमु-
दायत्वनिवेशे नायं दोष इति स्थलान्तरे व्यावृत्तिमाह तदेत्यादिना।
भाने-ज्ञाने, सामान्यतः-अधिकरणत्वरूपसामान्यधर्मावच्छिन्ने विशे-
षरूपानवच्छिन्न इति वा। साध्यवत्त्वभानात्-साध्यवत्त्वविषयकत्वात्,
उपनयस्य वारणाय तदिति योजना। पक्षे साध्यावशिष्ट्यावगाहित्वमे-
वान्यूनविषयकत्वं न तु पक्षतावच्छेदकवैशिष्ट्यान्तर्भाव-इत्यभिप्राये-
णेदम्। प्रमेयाद्वाच्यत्ववानयं प्रमेयः प्रमेयादित्यादिहेतुवारणाय पक्ष-
तावच्छेदकवैशिष्ट्यान्तर्भाव आवश्यक इति तदन्तर्भावाभिप्रायेण-
स्थलान्तरं व्यावृत्तिमाह यत्र चेति। पक्षेति। पक्षस्य तादृरूप्येण पक्षताव-
च्छेदकप्रकारेण दृष्टान्ततया यत्रोपन्यासः तत्रोदाहरणस्य साध्यस्य वा
तादृरूप्येण साध्यतावच्छेदकप्रकारेण हेतुतया यत्रोपन्यासः तत्रोपनय-
स्य वारणाय तदित्यर्थः। रूपान्तरेण पक्षसाध्ययोर्दृष्टान्तहेतुत्वाभ्या-
मुपन्यासे दर्शितान्यूनविषयकत्वासम्भव इति तादृरूप्येणेति। ननु पक्षे
साध्यनिश्चयदशायामेव तादृशदृष्टान्तहेतुसम्भव इति तत्र संशयाभा-
वान्न्याय एव न सम्भवतीत्यत आह तादृशसिषाधयिषयेति। अ-
न्यस्थले संशयस्यावश्यकत्वेऽपि वादस्थले न तथेति संशयमन्त-
रेणापि अनुमित्साधीनानुमितिनिर्वाहाय न्यायप्रयोगसम्भवा-
दिति भावः।

ननु सिषाधयिषया न्यायप्रयोगोपगमे पञ्चम्यर्थहेतुत्वे यादृशस-
म्बन्धेन प्रकृत्यर्थस्यान्वयस्तत्सम्बन्धेन वह्निसाध्यकहेतुत्वपक्षकवह्नि-
हेतुकन्यायान्तर्गतहेत्ववयवेऽतिव्याप्तिर्दुर्वारैवेति सिषाधयिषया न्या-
यप्रयोगो नाङ्गीकर्त्तव्य इत्यत उक्तव्यावृत्तिर्न सङ्गच्छत इत्यतः स्थला-
न्तरमनुसरति यत्र चेति। पर्वतत्वसामानाधिकरण्येन साध्यसिद्ध्यर्थ-
त्रोद्देश्यता तत्रैतत्पर्वतत्वेनापि दृष्टान्तता न सम्भवति एतत्पर्वतत्वेन

साध्यवत्तानिश्चयस्यापि तादृशानुमितिविरोधित्वादतः पर्वतत्वाव-
च्छेदेनेति । तत्रोदाहरणस्येति । यद्यपि पर्वतत्वावच्छेदेन वह्निमत्ताव-
गाहिन्यामनुमितौ पर्वतत्वव्यापकत्वस्य वह्न्यंशे भानात्तादृशदृष्टान्त-
घटितोदाहरणजन्यबोधे च तदभानादुद्दश्यानुमितिन्यूनविषयकत्वमे-
व, तथापि पक्षतावच्छेदकविशिष्टसाध्यतावच्छेदकविशिष्टवैशिष्ट्या-
वगाहित्वरूपं निर्वाच्यमन्यूनविषयकत्वमक्षतमेवेति भावः । यद्यपि
पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नवैशिष्ट्या-
वगाहित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयतानिवेशे
ऽप्युदाहरणैकदेशे एव तादृशविषयता न तु समुदाय इति न्यायावय-
वत्वनिवेशान्नातिव्याप्तिप्रसङ्गः, तथापि प्रतिज्ञामात्राघटकत्वगर्भं न्या-
यावयवत्वं प्रकृतलक्षणे प्रविष्टम्, तच्च यथार्थं पर्वत इत्युदाहरणैकदे-
शेऽपीत्याशयः । अवच्छेदकावच्छेदेन अनुमितिस्थलीयन्यायनिवि-
ष्टप्रतिज्ञालक्षणेऽवच्छेदकावच्छेदेन साध्यवैशिष्ट्यावगाहित्वरूपान्यू-
नविषयकत्वनिवेशने नैतद्ग्रन्थवृत्तिसङ्गतिरित्यपरितोषेण व्याचष्टयन्त-
रमाह सत्यन्तस्येति । अयमाशयः । एतल्लक्षणघटकन्यायावयवत्वश-
रीरे उभयघटकभागद्वयाघटितत्वं न निवेशनीयम्—अनतिरिक्तविषय-
कत्वविशेषणेनैव तादृशभागद्वयघटितसमुदायेऽतिप्रसङ्गवारणात् । न
च शब्दज्ञानस्यैव शाब्दबोधजनकतया जनकत्वमत्र जनकज्ञानविषय-
त्वमेव वाच्यम्, एवञ्च तादृशसमुदायविषयकज्ञानमध्येकदेशप्रतिज्ञा-
विषयकत्वेन तथाविधबोधजनकमिति समुदायेऽतिप्रसङ्ग इति वाच्यम्
तादृशबोधजनकतावच्छेदकीभूतयत्किञ्चिदेकज्ञानविषयितानिरूपक-
वर्णसमुदायत्वस्यैव विवक्षणीयत्वात् । न च तादृशवर्णसमुदायत्वं
तादृशवर्णत्वव्यापकसमुदायत्वम्, तादृशं च प्रतिज्ञाहेतुसमुदायत्वम-
पीति तत्समुदायेऽतिप्रसङ्ग एवेति तादृशभागद्वयाघटितत्वमवश्यमेव
निवेश्यमिति वाच्यम् । अनतिरिक्तपदसार्थक्याय तादृशयत्किञ्चिज्ज्ञा-
नविषयताशालिवर्णत्वसमनैयत्यमेव निवेश्य प्रतिज्ञाहेत्वादिसमुदाय-
त्वस्य वारणीयत्वात् । समानार्थकप्रतिज्ञाद्वयादिविषयकयत्किञ्चि-
ज्ज्ञानविषयताश्रयवर्णत्वसमनैयत्यस्य तादृशप्रतिज्ञाद्वयादिपर्याप्तस-
मुदायत्वे सत्त्वेपि न क्षतिः—तदुभयादावपि प्रतिज्ञाव्यवहारात् । अ-
पि तु प्रतिज्ञैकदेशस्यापि तादृशबोधनिष्ठवह्निसम्बन्धिबुद्धित्वाद्यव-
च्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतयत्किञ्चिदेकज्ञानविषय-

ताश्रयवर्णसमुदायत्वमादायैव प्रतिज्ञात्वप्रसङ्ग इति प्रतिज्ञाद्यघटकत्वं प्रतिज्ञामात्राघटकत्वं वा निवेशनीयम्। अन्यूनानतिरिक्तविषयकशाब्दबुद्धित्वस्य किञ्चिज्जन्यतानवच्छेदकतया तदवच्छिन्ननिरूपितजनकतानिवेशासम्भवात् । इत्थं चाननुषङ्गपक्षेऽप्ययं तस्माद्वह्निमान् इति भागे प्रतिज्ञादिहेत्वन्तभागे च व्यावृत्तिः सम्भवतीति अवयवाघटकेति । न च तदुपादानेऽपि धूमादालोकवान् पर्वतो वह्निमानित्यादिप्रतिज्ञार्थमात्रविषयकबोधनिष्ठधूमविशेषितहेतुत्वविषयकशाब्दत्वावच्छिन्नकारणधूमादित्यादिहेतुविषयकज्ञानविषयतामादायावयवाघटके ताद्दशहेतावतिव्याप्तिवारणायानतिरिक्तविषयकबोधनिष्ठपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वरूपान्यूनविषयकत्वावच्छिन्नजनकतावच्छेदकयत्किञ्चिज्ज्ञानीयविषयतानिरूपकवर्णसमुदायत्वनिवेशस्यावश्यकतयाऽवयवाघटकत्वनिवेशनं निष्प्रयोजनकमिति वाच्यम्। ताद्दशहेतुवारणायावयवाघटक इत्यनेनावयवैकदेशमात्रविषयकज्ञाननिष्ठजनकताव्यावृत्तावयवत्वपर्याप्त्यवच्छेदकयत्किञ्चिद्धर्मव्यापकविषयताकान्यज्ञानवृत्तित्वावच्छिन्नभेदस्यैवान्यूनानतिरिक्तविषयकबोधजनकतायां विवक्षणीयत्वात्। अवयवत्वं चेह न्यायान्तर्गतत्वविशेषणशून्यम्, तेन प्रतिज्ञासमानाकारोदासीनवाक्यज्ञाने प्रतिज्ञाज्ञानीयकारणतायाः सत्त्वेऽपि तत्सङ्ग्रहः ताद्दशोदासीनवाक्येऽपि तथाविधावयवत्वपर्याप्तेरिति।

वस्तुतस्तु अवयवत्वघटकविशेष्यपरित्यागमात्रेणैव व्यावृत्तिः सङ्गच्छत इति ताद्दशजनकतापर्यन्तनिवेशने प्रतिज्ञाद्यघटकत्वदलपरित्यागसम्भवेऽपि तत्परित्यागस्य प्रकृतानुपयुक्तत्वमित्येतल्लाभायैकावयवाघटकेत्यभिहितमिति।

केचित्तु यत्र प्रतिज्ञैकदेशस्यापि कथञ्चित्प्रतिज्ञासमानार्थकत्वं सम्भवति तत्रैकदेशेऽतिप्रसङ्गवारणायावयवाघटकत्वनिवेशनमावश्यकमित्याहुः। तदसत्। प्रतिज्ञाप्रतिपाद्यविशिष्टार्थप्रतिपादकताया एकदेशे सम्भवेऽपि तन्मात्रस्य तथाविधबोधपरत्वाभावात् तथात्वे समुदायप्रयोगानुपपत्तेः, कथंचित्तत्प्रयोगेऽपि समुदायमन्तर्भाव्य न्यायत्वानङ्गीकारात्। अप्रकृतार्थपरवाक्यवारणाय च वास्तवतथा-

च्छिन्नतात्पर्यपरतायास्तल्लक्षणेऽवश्यं निवेशनीयतया एकदेशमात्रस्य तादृशार्थपरत्वाभावेनाऽतिप्रसङ्गानवकाशादिति ।

हेत्वन्तस्येति । कथितान्यूनविषयकत्वावच्छिन्नजन्यतानिरूपितजनकतानिवेशने तत्तदङ्गप्रतिपाद्यविशिष्टार्थबोधजनकत्वमादाय केवलहेत्वादावतिव्याप्तिर्न सम्भवति तादृशजनकताश्रययत्किञ्चिज्ज्ञानविषयवर्णसमुदायत्वस्य तत्रापर्याप्तेरतो हेतुमात्रनिगमनमात्रे उपेक्षिते ॥

अन्यूनानतिरिक्तविषयकत्वस्य प्रकृतानुमितिविषयस्यान्यूनः सन्ननतिरिक्तो विषयो यस्येति व्युत्पत्तेरनुमितिविषयनिष्ठभेदप्रतियोगितानवच्छेदकत्वे सत्यनुमितिविषयातिरिक्तावृत्ति यद्विषयत्वं तत्त्वमिति यथाश्रुतार्थमाक्षिपति यद्यपीति । यद्यपि प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकयत्किञ्चिदनुमित्यविषयविषयकत्वं पर्वतो वह्निमानित्यादिप्रतिज्ञाजन्यानिखिलबोधानामेवेति तादृशानुमितिविषयत्वसामान्याभावो विवक्षणीयः तथा च केवलाभिधेयत्वाद्यवच्छिन्नपक्षकस्थलेऽप्यतिरिक्ताप्रसिद्धिरस्त्येव, तथाप्यप्रसिद्धिं स्फुटीकर्त्तुमभिधेयत्वाद्यवच्छिन्नपक्षकप्रमेयत्वत्वाद्यवच्छिन्नसाध्यकस्थले विश्वमेवानुमितिविषय इत्येतल्लाभाय सर्वमित्युक्तम् । 'सर्वेभ्यो दर्शपूर्णमासा'वित्यत्रेव प्रक्रान्तकतिपयपदार्थमात्रवृत्तिसर्वत्वावच्छिन्नतात्पर्येणापि विशेष्यवाचकपदान्तरासमभिव्याहृतसर्वपदप्रयोगसम्भवात् सर्वं प्रमेयमित्युक्तावनुमितिविषयतायाः केवलान्वयित्वालाभादभिधेयमित्युक्तम् । एवञ्च किञ्चिद्धर्मावच्छिन्नांशेऽभेदेन स्वार्थविशेषणकबोधपरसर्वशब्दस्य तद्धर्मव्यापकविधेयव्याप्यसर्वत्वबोधकताव्युत्पत्तेरभिधेयत्वव्यापकसर्वत्वलाभान्नानुमितेः कतिपयवस्तुमात्रविषयकत्वशङ्केति भावः । अतिरिक्ताप्रसिद्धिः-प्रकृतानुमितिविषयतातिरिक्ताप्रसिद्धिः । प्रमेयत्वं पक्षनिष्ठाभावप्रतियोगि न वेति संशयसम्भवेन तादृशप्रतिज्ञासम्भव इत्यतस्तत्संग्रहायान्यूनानतिरिक्तविषयकत्वमन्यथा निर्वक्ति प्रकृतेति । स्वविषयताव्यापकप्रकृतानुमितिविषयताव्यापकविषयताकत्वमर्थः—स्वविषये अनुमितिविषयान्यूनत्वस्य स्वविषयत्वे तद्विषयताव्यापकत्वपर्यवसितत्वात् । स्वविषयेऽनुमितिविषयानतिरिक्तत्वस्य च तद्विषयत्वे स्वविषयताव्यापक-

त्वपर्यवसितत्वादिति भावः । यद्यपि समूहालम्बनरूपपर्वतपक्षकवह्निविधेयकानुमितिविषयितायाः विश्ववृत्तितया पर्वतो वह्निमान्इति प्रतिज्ञामात्रजन्यबोधो न तादृशानुमितिविषयतासमनियतविषयताकः वाक्यान्तरसहिततज्जन्यसमूहालम्बनबोधजनकयत्किञ्चिज्ज्ञानविषयवर्णसमुदायत्वं च न तन्मात्रपर्याप्तम्, यत्किञ्चित्प्रकृतानुमितिव्यक्तिविषयतासमनैयत्यस्य विवक्षणेपि च निगमनाद्यतिव्याप्तिर्दुर्वारैव–तज्जन्यबोधस्यापि पर्वतो वह्निमान् धूमज्ञानजाप्यवह्निमांश्चेत्याकारकसमूहालम्बनानुमितिसमनियतविषयताकत्वात्, तथापि प्रकृतपक्षकप्रकृतसाध्यव्याप्यवत्तापरामर्शत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकविषयतात्वेन यद्विषयतासमनैयत्यं तत्त्वस्य विवक्षितत्वान्न दोषः । नन्वेवंसत्युक्तस्थलीयोपनयेऽतिव्याप्तिः तज्जन्यबोधस्यापि विश्वविषयकत्वेन तथाविधानुमितिविषयतासमनियतविषयताकत्वादित्यतो विषयपदस्य प्रकारत्वाभिप्रायेणान्यथा तदर्थं निर्वक्ति प्रकृतेति । तादृशोपनयजन्यबोधे प्रकारीभवतोऽभाववत्वादेस्तादृशानुमितावप्रकारत्वान्न तत्प्रकारतायाः समनैयत्यमिति नातिव्याप्तिरिति भावः । सकलेति । सकलाभिधेयवृत्तिधर्मवदिदं द्रव्यमिति योजना । तादृशानुमिताविव एतस्थलीयोपनयजन्यबोधे विश्वस्यैवाभिधेयत्वेन प्रकारतया तत्प्रकारतायाः समनैयत्यमक्षतमेवेति भवत्यतिव्याप्तिरिति भावः । ननु विशेषणानवच्छिन्नप्रकारतानां समनैयत्यं विवक्षणीयमतो नातिव्याप्तिः उपनयजन्यबोधेऽभावत्वादौ तादृशप्रकारतासत्त्वादुक्तानुमितेस्तादृशप्रकारतायाश्च तत्रासत्त्वादित्यतो अनुमितावपि तेषां तथाविधप्रकारताघटनाय स्थलान्तरेऽतिव्याप्तिमाह सकलाभिधेयेति । तत्राभावत्वप्रतियोगित्वत्वादीनां स्वरूपतः पक्षतावच्छेदकघटकत्वाद्भवति तथात्वमिति भावः । द्रव्यमिति विपरीतकोटिप्रसिध्यर्थं । विशिष्टपक्षबोधक इति । उपनयस्थेदंपदेन विशेष्यमात्रपरामर्शोऽन्यूनविषयकत्वं न सम्भवतीति भ्रमनिराकरणाय व्याप्तिशरीरे साधनसाध्यप्रकारेणैव तदधिकरणान्तर्भावः, न त्वधिकरणत्वेनापीत्यनुमितौ तस्य तत्त्वस्य वा स्वरूपतः प्रकारत्वविरहेऽपि नासङ्गतिः । हेतुरत्र भेदत्व समवायेन द्रव्यमेव वा बोध्यम् । गुणादेस्तथात्वे हेतुतावच्छेदकगुणत्वादेः स्वरूपत उपनयजन्यबोधे भाने कथितप्रकारता-

समनैयत्यानुपपत्तेः । न चाभेदेन विषयतासमनैयत्योक्तौ अनुमिति-विषयतात्वसमनियतस्वाविषयतात्वकत्वोक्तौ वा नायं दोष इति वाच्यम् । हेत्वर्थघटितार्थकप्रतिज्ञाघटितन्यायान्तर्गतहेतुजन्यबोधविषयताया अनुमितिनिरूपितविषयतात्वाभावात् अनुमितिविषयतात्वव्याप्य-स्वविषयतात्वकत्वाभावादेव तादृशबाधवारणसम्भवेनान्यूनवि-षयकत्वांशवैयर्थ्यापत्तेः, न हि साध्यतावच्छेदकावच्छिन्न-साध्यविशिष्टप्रकृतपक्षतावच्छेदकावच्छिन्नविषयताबहिर्भूतविषयता अनुमितिनिरूपिता । समूहालम्बनानुमितिनिरूपितविषयत्वमादाय तु नातिप्रसङ्गावकाशः—प्रकृतपरामर्शजन्यतावच्छेदकविषयतात्व-स्यैव निवेशनीयत्वात्, अन्यथाऽसम्भवापातादिति । उपनय-विशेषातिव्याप्त्यभिधानं चोपलक्षणपरम् । अन्यूनविषयकत्वस्य निरुक्तार्थकत्वे सर्वस्मात्कालत्ववानयं कालपरिमाणवान् सर्व-स्मादित्यत्र हेत्ववयवेऽव्यतिव्याप्तिर्बोध्या—तज्जन्यबोधविषयतायाः त्रि-त्ववृत्तित्वेनानुमितिविषयताव्यापकत्वात् । एवं तादृशान्यूनविषय-कत्वस्य किञ्चिज्जन्यतानवच्छेदकत्वेन तदवच्छिन्नजन्यताविवक्षणा-सम्भवेन प्रतिज्ञाहेतुजन्यसमूहालम्बनबोधमादाय तद्विशिष्टहेत्वर्थविष-यकत्वावच्छिन्नजन्यतानिरूपितजनकताश्रये धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादौ हेत्ववयवेऽतिव्याप्तिर्दुर्वारा । तस्या अनवच्छि-न्नप्रकारताव्यापकतादृशप्रकारताकत्वविवक्षयापि वारणासम्भवादि-त्यपि बोध्यम् ।

एतद्दोषवारणाय प्रथमतोऽनुमित्यन्यूनविषयकत्वमन्यथा निर्व-क्ति तथापि प्रकृतेति । एतच्च पक्षतावच्छेदकविशिष्टार्थकम्, तदनु-पादाने प्रमेयाद्वाच्यत्ववानयं प्रमेयः प्रमेयादित्यादौ हेत्ववयवे य-त्किञ्चिद्धर्मावच्छिन्नत्वोपादानेऽपि घटान्यत्ववद्रूपघटान्यतरस्मा-द्घटान्यत्ववत्सधर्म्मा घटो घटान्यत्ववानित्याकारिका या सामा-नाधिकरण्यसम्बन्धेन घटान्यत्वसाध्यकप्रतिज्ञा तद्घटितन्याया-न्तर्गते रूपघटान्यतरत्वावच्छिन्नांशे सामानाधिकरण्यसम्बन्धेन विशे-षणतापन्नघटान्यत्वघटिततादृशसम्बन्धावच्छिन्नहेतुके विशिष्टान्य-तररूपहेतुप्रतिपादकहेत्ववयवेऽतिव्याप्तिः । घटत्वादौ सामानाधिक-रण्यसम्बन्धेन रूपवति व्यभिचारवारकतया घटान्यत्वात्मकविशेष-णस्य धर्मिभेदेन च विशेष्यस्य घटान्यत्वसमानाधिकरणसत्तासमा-

नाधिकरणे घटरूपादौ व्यभिचारवारकतया तत्र विशेष्यतावच्छेद-कस्य सार्थकत्वमित्यवधेयम् । सामानाधिकरण्यसम्बन्धस्य वृत्त्य-नियामकतया व्यापकत्वाघटकत्वेऽपि नित्यद्रव्यावृत्तिधर्मशून्यत्वा-न्निरवयवं गगनं नित्यद्रव्यावृत्तिधर्मशून्यत्वात् वह्निमत्पर्वतावृत्तिध-र्मशून्यत्वादालोकवान् पर्वतो वह्निमान् वह्निमत्पर्वतावृत्तिधर्मशून्य-त्वादित्यादौ हेत्ववयवेऽतिव्याप्तिवारणाय पक्षतावच्छेदकवैशि-ष्ट्यनिवेशनमावश्यकम् अखण्डाभावघटकतया हेतुघटकद्रव्यत्वपर्व-तत्वादीनामवैयर्थ्यम् ॥

(दी०) प्रकृतपञ्चम्यर्थपक्षकप्रतिज्ञादिस्थले तु पक्षे प्रकृत्य-र्थस्य वैशिष्ट्यबोधको हेतुर्न तु प्रकृतसाध्यस्य, तादृशाविषयता-विलक्षणविषयताशून्यत्वं प्रकृतहेतुकप्रकृतसाध्यसिद्ध्यौपयिक-व्याप्त्यविषयकत्वं वा तदनतिरिक्तविषयत्वम् । वह्निव्याप्यालो-कवत्सधर्म्मा पर्वतो वह्निमान् धूमादिन्धनव्याप्यधूमवान् पर्वतो वह्निमान् धूमादित्यादौ तस्याः सङ्ग्रहाय प्रकृतहेतुसाध्ययोरुपा-दानम् । वह्निव्याप्यधूमवान् पर्वतो वह्निमान् धूमात् सत्तादिव्या-प्यद्रव्यत्ववदिदं सत्तादिमद्द्रव्यत्वादित्यादिस्तु न प्रयोगः—विशि-ष्टपक्षोपस्थापकादेव तादृशव्याप्तिप्रतीतावाकाङ्क्षाविरहेणोदाहर-णानुत्थानात्, अन्यथातिप्रसङ्गात् । अत एव नैकदोभयव्या-प्त्युपन्यासोऽपि ।

यदि च मैत्रः पचति अयं गौरित्यादेरेव प्रतिज्ञाया यथोप-वर्णितविशिष्टज्ञानजनकत्वं तादात्म्येन गोः साध्यत्वात् गोत्व-त्वाद्यनुपस्थितया गोत्वादेः साध्यत्वानुपपत्तेः पदार्थतावच्छेदक-जातौ हेत्वर्थान्वयायोगाच्च, वह्निमानित्यादौ पुनरनुमितौ पक्षे साध्यस्य वह्नेः संयोगात्मकः सम्बन्धो भासते तथैव वह्निव्या-प्यधूमवानित्याद्युपनयसङ्गमात् शाब्दभाने तु वह्निमतोऽभेद एवं भेदे साध्ये भिद्यते भिन्नमित्यादावपि वैलक्षण्यमिति सूक्ष्म-

# हरिदाससंस्कृतग्रन्थमालासमाख्य-
# काशीसंस्कृतसीरीज् पुस्तकमाला: ।

इयं काशी—संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति । एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते । परं तु एतस्या नियमेनाऽविच्छिन्नतया निश्चितग्राहकमहाशयानां प्रतिमुद्राशतकं पञ्चविंशतिमुद्राः ( कमिशन ) परावर्तिता भवेयुः मार्गव्ययश्च न पृथक् दातव्यो भवेत् ।

| तत्र मुद्रितग्रन्थनामानि । | | रु. आ. प. |
|---|---|---|
| १ नलपाकः नलविरचितः । संपूर्णः | ( पाकशास्त्रम् १ ) | १—८—० |
| २ संक्षेपशारीरकम् । रामतीर्थस्वामिकृताऽन्वयार्थबोधिनीटीकासहितम् । | ( वेदान्तं १ ) | १०–०—० |
| ३ वैशेषिकदर्शनम् । सटीक-प्रशस्तपादभाष्योपस्काराभ्यां समन्वितम् । | ( वैशेषिकं १ ) | ३—८—० |
| ४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधराद्याचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् | ( वैदिकं १ ) | ०—६—० |
| ५ लघुशब्देन्दुशेखरः चन्द्रकलाटीकासहितः तत्पुरुषादिसमाप्तिपर्यन्तः । | ( व्याकरणं १ ) | १०–०—० |
| ६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुणनिरूपण" दिनकरीय महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिव्याख्यासहिता । | ( न्यायं १ ) | ६—०—० |
| ७ पञ्चीकरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया–तत्त्वचन्द्रिकासमवेतविवरणन च समन्वितम् । | ( वेदान्तं २ ) | ०—८—० |
| ८ अलङ्कारप्रदीपः पण्डितवर विश्वेश्वरपाण्डेयनिर्मितः । | ( काव्यं १ ) | ०—८—० |
| ९ अनङ्गरङ्गः महाकविकल्याणमल्लविरचितः । | ( कामशास्त्रं १ ) | ०—१२–० |
| १० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः । | [ज्यो० १] | २–०–० |

| तत्र मुद्रितग्रन्थनामानि | रु. आ. पा. |
|---|---|
| ११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-कल्पसहितम् । [ कर्म० १ ] | ०--८--० |
| १२ पुरुषसूक्तम् । सायणभाष्य-महीधर-भाष्य-मगलभाष्य-निम्बार्कमतभाष्यचतुष्टयसहितम् । ( वैदिकं २ ) | १--४—० |
| १३ श्रीमत्सनत्सुजातीयम्-श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च सवलितम् । [ ०३] | १—४—० |
| १४ कुमारसंभवं महाकाव्यम् । महाकवि श्रीकालिदास-वि० । सञ्जीवनी-शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम् । ( काव्यं २ ) | २—०—० |
| १५ श्रुतबोधश्छन्दोग्रन्थः । आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः [ छंदः १ ] | ०—६—० |
| १६ कारिकावली मुक्तावली-न्यायचन्द्रिका-टीकाद्वयसहिता सटिप्पणा । ( न्याय २ ) | १—०—० |
| १७ पारस्करगृह्यसूत्रं हरिहरभाष्य-गदाधरभाष्यद्वय-सहितम् । ( कर्मकाण्डं २ ) | ३—४—० |
| १८ संक्षेपशारीरकम्-मधूसूदनीटीका भाग १ ( वेदान्तं ४ ) | ५—०—० |
| १९ लघुजूटिका-अर्थात् अभिनवा परिभाषेन्दु-शेखरपरिष्कृतिनिर्मितिः । | ०—८—० |
| २० कातीयेष्टिदीपकः । ( दर्शपौर्णमासपद्धतिः ) | १—०—० |
| २१ सप्तपाठि-श्रीशिवमहिम्नस्तोत्रम् ( स्तोत्रवि० ) | १—०—० |
| २२ बौद्धाऽऽचार्य श्रीधर्मकीर्तिप्रणीतः सटीक-न्यायबिन्दुः भाषाटीकासहितः ( बौद्धन्याय वि० १ ) | १—८—० |
| २३ सपरिष्कृत दर्पणसहित वैयाकरणभूषण-सारः ( व्याकरणं वि० ३ ) | ४—०—० |



पत्रादिप्रेषणस्थानम्

१० नवम्बर १९२४.

जयकृष्णदास—हरिदासगुप्तः,
चौखम्बा संस्कृत सीरीज आफीस,
विद्याविलास प्रेस, गोपालमंदिर लेन,
बनारस सिटी ।